कार्यता क्षयिणी तत्र
 कर्तृत्वं पुनरक्षयम् ॥ १४ ॥

कार्योन्मुखः प्रयत्नो यः
 केवलं सोऽत्र लुप्यते ।
तस्मिँल्लुप्ते विलुप्तोऽस्मी-
 त्यबुधः प्रतिपद्यते[1] ॥ १५ ॥

न तु योऽन्तर्मुखो भावः
 सर्वज्ञत्वगुणास्पदम् ।
तस्य लोपः कदाचित्स्या-
 दन्यस्यानुपलम्भनात् ॥ १६ ॥

अत्र स्पन्दतत्त्वे कार्यत्वं कर्तृत्वमिति च शब्दितं शब्दव्यवहारमात्रेण भेदितमवस्थायुगलमस्ति, वस्तुतो हि तदेकमेव स्वतन्त्रप्रकाशघनशंकररूपं तत्त्वं कर्तृसत्त्वाव्यतिरिक्तया प्रकाशात्मना क्रियया व्याप्तं तदभेदेन प्रकाशमानं तत्त्वभुवनशरीरवदभावादिरूपत्वं स्वीकुर्वत्कार्यमित्युच्यते तदन्यस्य कस्यापि कारणतायोगात् । यथोक्तं श्रीमत्यभिज्ञायाम्

'जडस्य तु न सा शक्तिः सत्ता यदसतः सतः ।
कर्तृकर्मत्वतत्त्वैव कार्यकारणता ततः ॥' (ई० प्र० २।४।२)

इति । तस्य चेदमेव कार्यत्वं यदयं विचित्रदेशकालाद्याभा-

---

१ ख० पु० प्रपद्यते इति पाठः ।

ससंयोजनवियोजनक्रमेणानन्तान् देहनीलाद्याभासांश्चिदात्मनः स्वरूपादनतिरिक्तानपि मुकुरप्रतिबिम्बवदतिरिक्तानिवाभासयति, यावच्च किंचिदाभासयति तत्सर्वमाभास्यमानत्वादेव बहिर्मुखेन रूपेण क्षयधर्मकं, क्षयश्चास्येदन्ताभासनिमज्जनेनाहन्तारूपतयावस्थानम्, अत एव देहादेर्ग्राहकस्य यो वेद्यांशः स एव भगवता सृज्यते संह्रियते च न त्वहन्ताप्रकाशात्मकं कर्तृरूपं तस्य देहाद्यावेशेऽपि भगवदेकरूपत्वात्; अतस्तत्र तयोः कार्यकर्तृत्वयोर्मध्यात्कार्यता क्षयिणी कर्तृत्वं चित्स्वातन्त्र्यरूपं पुनरक्षयं जगदुदयापाययोरपि तस्य स्वभावादचलनात्। चलने तु जगदुदयापायावपि न कौचिच्चकास्यातामिति मूढाद्यवस्थायामप्यखण्डितचमत्कारसारममूढमेवैतत्। नन्वभावसमाधाननिष्पत्तौ सुषुप्तादौ चास्य कर्तृत्वं नोपलभामहे क्वचिदपि प्रवृत्त्यदर्शनात्। सत्यं, कार्योन्मुख इन्द्रियादिप्रेरणात्मकव्यापारप्रवणो यः प्रयतः संरम्भः सोऽत्र कार्यक्षयपदे लुप्यते विच्छिद्यते, तस्मिंल्लुप्ते सति अबुधोऽभावसमाध्यपहारितात्मरूपो मूढो विलुप्तोऽस्मीति मन्यते। यः पुनरन्तर्मुखोऽहन्ताप्रकाशरूपः स्वभावोऽस्त एव सर्वज्ञत्वगुणस्यास्पदम् उपलक्षणं चैतत्सर्वकर्तृत्वादेरपि, तस्य लोपो न कदाचित्स्याद्भवतीति न कदाचिदपि सम्भावनीयोऽन्यस्य तल्लोपमुपलब्धुः कस्याप्यनुपलम्भात्, यदि स कश्चिदुपलभ्यते स एवासावन्तर्मुखश्चिद्रूपो न चेदुपलभ्यते तर्हि सा लोपदशास्तीति कुतो निश्चयः। अथ चान्यः कश्चित्तल्लोपं नोपलभतेऽपितु स एव प्रकाशात्मा तत्कथं तस्याभावः। एवं चान्यस्यानुपलम्भनादित्यत्रान्यकर्तृकस्योपलम्भस्याभा-

वादित्यर्थः । अथ च घटाभावो यथा घटविविक्तभूतला-द्युपलम्भनान्निश्चीयते तथैवात्माभावोऽप्यात्मविविक्तस्य क-स्यचिदुपलम्भान्निश्चीयेत तदुपलम्भकसत्तावश्यंभाविनीति तदुपलम्भकस्यात्मनास्तिता न सिध्यति । यदि च कार्यो-न्मुखप्रयत्नलोपे स लुप्येत तदोत्तरकालमन्यस्य कस्याप्यु-पलम्भो न भवेत् अन्योपलम्भाभावः प्रसज्येतेत्यर्थः । अपि चान्यस्य बहिर्मुखस्य प्रयत्नस्य सौपुप्तादावनुपलम्भा-त् कथमन्तर्मुखस्य तत्त्वस्य बालिशैर्लोप आशङ्कितो य-तोऽन्यस्य लोपेऽन्यस्य किं वृत्तम् । अथ चान्यस्य कार्यो-न्मुखप्रयत्नस्यानुपलम्भादनुपलम्भप्रकाशनान्न कदाचित्प्र-काशात्मनोऽन्तर्मुखस्य तस्योपलब्धुर्लोपः, यतोऽसावन्तर्मु-खोभावः सर्वज्ञत्वगुणस्यास्पदं तामप्यभावदशां वेत्त्येव अ-न्यथा सैव न सिध्येदिति । अन्यस्येति कर्तरि कर्मणि च षष्ठी । अन्तर्मुखे कार्यत्वप्रतियोगितामिव कर्तृत्वस्य संभा-व्यावस्थात्वमुक्तं वस्तुतस्तु उक्तयुक्त्या तस्यावस्थातृत्वमेव । अन्तर्मुख इति अन्तः पूर्णाहन्तात्मकं मुखं प्रधानं यस्येति योज्यम् ॥ १६ ॥

एवमप्रबुद्धो बहिर्मुखव्यापारनिरोधे ग्राहकस्याप्यात्म-नोऽनुपपन्नमप्यभावं निश्चिनुत इति प्रतिपाद्य सुप्रबुद्धाप्रबु-द्धयोर्यादृगात्मोपलम्भस्तं निरूपयति

तस्योपलब्धिः सततं
त्रिपदाव्यभिचारिणी ।
नित्यं स्यात्सुप्रबुद्धस्य
तदाद्यन्ते परस्य तु ॥ १७ ॥

तस्य भाकरणिकस्वभावस्य योपलब्धिः अनवच्छिन्नः प्रकाशः सा कथितयुक्त्यवष्टम्भात्सुष्ठु प्रबुद्धस्याप्रबुद्धतासंस्कारेणापि शून्यस्य सततं त्रिष्वपि जागरस्वप्नसौषुप्तपदेषु नित्यमिति आदौ मध्येऽन्ते चाव्यभिचारिणी अनपायिनी साङ्गवत्येव सदासौ शंकरात्मकस्वस्वभावतया स्फुरतीत्यर्थः । परस्याप्रबुद्धस्य पुनस्तासां दशानां स्वोचितसंविद्रूपाणां प्रत्येकमदावुद्बुभूपायामन्ते च विश्रान्त्यात्मकान्तर्मुखत्वे न तु स्वोचितार्थावभासावस्थितिरूपे मध्यपदे । यदुक्तं श्रीशिवदृष्टौ

'यावत्सममप्रज्ञानाप्रज्ञातृस्पर्शदशास्यपि ।
स्थितैव लप्स्यते सा तु तद्विश्रान्त्यायथा फले ॥' (शि० दृ० २।५)

इति । भट्टलोल्लटेनापि तदाद्यन्त इत्येवमेव व्याख्यायि स्ववृत्तौ । भट्टश्रीकल्लटवृत्त्यक्षराण्यपेक्ष्य वयमपि तद्वृत्त्यक्षरानुरोधेन सौत्रमर्थमतिविमलमपि क्लिष्टकल्पनया व्याकर्तुमशिक्षिताः, यत एवासुप्रबुद्धस्य तदाद्यन्तेऽस्ति तदुपलब्धिः अत एवायमिहाधिकारी स्पन्दोपदेशैः सुप्रबुद्धीक्रियते । यद्वक्ष्यति

'अतः सततमुद्युक्तः स्पन्दतत्त्वविविक्तये ।
जाग्रद . . . . ॥' [ १ । २१ ]

इत्यादि

'सौषुप्तपदवन्मूढः प्रबुद्धः स्यादनावृतः ।' [ १ । २५ ]

इति

तथा स्वप्नेऽपि [ ३ । २ ]

इत्यादि

'प्रबुद्धः सर्वदा तिष्ठेत् ।' [ ३ । १२ ]

इत्यादि च । अत्र हि जागरादित्रिषु पदेषु आद्यन्तकोटिव-

न्मध्यमप्यर्थावसायात्मकं पदं तुर्याभोगमयं कर्तुं प्रबुद्ध-स्य सुप्रबुद्धतापादनायोपदेशः प्रवृत्तः, एतच्च निर्णेष्यामः।
तथा च शिवसूत्रम्

'जाग्रत्स्वप्नसुषुप्तभेदे तुर्याभोगसंभवः।' (शि० सू० १। ७)

इति। तथा

'त्रिषु चतुर्थं तैलवदासेच्यम्।' (शि० सू० ३। २०)

इति

त्रितयभोक्ता वीरेशः।' (शि० सू० १। ११)

इति॥ १७॥

सुप्रबुद्धस्य त्रिषु पदेषु यादृश्युपलब्धिस्तां विभागेन दर्शयति

ज्ञानज्ञेयस्वरूपिण्या
शक्त्या परमया युतः।
पदद्वये विभुर्भाति
तदन्यत्र तु चिन्मयः॥ १८॥

सुप्रबुद्धस्य भूम्ना ज्ञानज्ञेयस्वरूपया मध्यमे पदे ज्ञाना-ग्रपर्यन्तयोस्तु स्वस्वरूपयैव स्पन्दतत्त्वात्मना पराशक्त्या युक्तो विभुः शंकरात्मा स्वभावो जागरास्वप्नरूपे पदद्वये भाति। तत्र हि विश्वमसौ सदाशिवेश्वरवत्स्वाङ्गवत्पश्यति, तदन्यत्र तु सुषुप्ते न तु यथान्ये सुषुप्ततुर्ययोरिति, 'त्रिपदा-व्यभिचारिणी' इति प्रक्रान्ते तुर्यस्याप्रस्तुतत्वात् तदुपल-ब्धेरेव च तुर्यरूपत्वात्, असौ विभुश्चिन्मय एवास्य भाति अशेषवेद्योपशमादित्येतत्सुप्रबुद्धाभिप्रायमेव न तु वस्तुवृ-त्तानुसारेण 'तदन्यत्र तु चिन्मयः' इत्यस्यानुपपन्नत्वाप-

चेः, लोके सौषुप्तस्य मोहमयत्वात् शिवापेक्षया तु जाग्रत्स्वप्नयोरपि चिन्मयत्वात् एवमपि च प्रकृतानुपयुक्तत्वात्। इतः प्रभृति प्रथमनिःष्यन्दान्तो ग्रन्थः प्रबुद्धस्य सुप्रबुद्धतार्थं स्थितो यथा टीकाकारैर्न चेतितस्तथा परीक्ष्यतां स्वयमेव, कियत्प्रतिपदं लिखामः ॥ १८ ॥

यथेयं जागरादिमध्यदशापि प्रबुद्धं न प्रतिबध्नाति तथोपपादयति

गुणादिस्पन्दनिष्यन्दाः
सामान्यस्पन्दसंश्रयात्।
लब्धात्मलाभाः सततं
स्युर्ज्ञस्यापरिपन्थिनः ॥ १९ ॥

गुणाः सत्त्वरजस्तमांसि येषां प्रकृतितत्त्वं विभवभूः ते मायातत्त्वावस्थिता इहाभिप्रेताः। यथोक्तं श्रीस्वच्छन्दे मायामस्तकविन्यासे

'अधश्छादनमूर्ध्वं च रक्तं शुक्लं विचिन्तयेत्।
मध्ये तमो विजानीयाद्गुणास्त्वेते व्यवस्थिताः ॥' [स्व० त० २।६५]

इति। त आदयो येषां कलादीनां क्षित्यन्तानां स्पन्दानां विशेषप्रसराणां तेषां ये निःष्यन्दास्तनुकरणभुवनप्रसराः नीलसुखादिसंविदश्च तथा योग्यपेक्षया बिन्दुनादादयस्ते सततं ज्ञस्य सुप्रबुद्धस्य कस्यचिदेवापश्चिमजन्मनोऽपरिपन्थिनः स्वस्वभावाच्छादका न भवन्तीति निश्चयः, यतस्ते सामान्यस्पन्दमुग्ररूपमाश्रित्य यत्र स्थितमित्यत्र निर्णीतरूपा लब्धात्मलाभास्तत एवोत्पन्नास्तन्मयाश्चेत्यर्थः।

तथाहि

'स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये त एव पशोः सत्त्वं रजस्तमः ॥' [ ई० प्र० ३ । ३ । ४ ]

इति श्रीप्रत्यभिज्ञोक्तदृशा चितिशक्तिरेव पारमेश्वरी ज्ञानक्रियामायाशक्तित्रितयतया श्रीसदाशिवादिपदे स्फुरित्वा संकोचप्रकर्षात्सत्त्वरजस्तमोरूपं क्रीडाशरीरं श्रयति, यतो निजचिच्छक्तिस्फारमयत्वात्तदधिष्ठितमेव सर्वदा सर्वं जानन्सुप्रबुद्धो गुणादिविशेषस्पन्दाननुच्छिन्दन्नपि स्पन्दतत्त्वावेशमय एव ॥ १९ ॥

यथा त्वप्रबुद्धान्घ्नन्त्येते तत्प्रतिपादयति

अप्रबुद्धधियस्त्वेते
स्वस्थितिस्थगनोद्यताः ।
पातयन्ति दुरुत्तारे
घोरे संसारवर्त्मनि ॥ २० ॥

अप्रबुद्धधियः प्रायः सर्वानप्रत्यभिज्ञातपारमेश्वरीशक्त्यात्मकनिजस्पन्दतत्त्वान्देहात्ममानिनो लौकिकान्प्राणाद्यात्माभिमानिनश्च मितयोगिनस्त्वेते पूर्वोक्ता गुणादिस्पन्दनिःष्यन्दाः स्वस्याः स्पन्दतत्त्वात्मनः स्थितेः स्थगनायोद्यता नित्यं तदुद्यमैकसाराः, दुःखेनोत्तार्यन्तेऽस्माद्दैशिकैर्जन्तुचक्रामिति दुरुत्तारे लङ्घयितुमशक्ये घोरे दुःखमये संसरणमार्गे पातयन्ति । यथोक्तं श्रीमालिनीविजये

'विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।
रुद्राण्यः समालिङ्ग्य घोरतर्योऽपराः स्मृताः ॥' [ मा० वि० ३ । ३१ ]

इति । तथा हि पूर्वं प्रतिपादिता येयं स्पन्दतत्त्वात्मा परा-

शक्तिः सैव विश्वस्यान्तर्बहिश्च वमनात्संसारवामाचारत्वाच्च वामेश्वरीशक्तिः तदुत्थापितानि तु खेचरीगोचरीदिक्चरीभूचरीरूपाणि चत्वारि देवताचक्राणि सुप्रबुद्धस्य परभूमिसंचारीणि अप्रबुद्धानां तु अधराधरसरणिप्रेरकाणि। तथा हि या एव सुप्रबुद्धस्य खे बोधगगने चरन्त्यः खेचर्योऽकालकलितत्वाभेदसर्वकर्तृत्वसर्वज्ञत्वपूर्णत्वव्यापकत्वप्रथाहेतवस्ता एवाप्रबुद्धस्य शून्यप्रमातृपदचारिण्यः कञ्चुकरूपतया स्थिताः कालकलितत्वाकिंचित्कर्तृताकिंचिज्ज्ञताभिष्वङ्गनियमहेतवः। गौर्वाक् तदुपलक्षितासु संजल्पमयीषु बुद्ध्यहंकारमनोभूमिषु चरन्त्यो गोचर्यः सुप्रबुद्धस्य स्वात्माभेदमयाध्यवसायाभिमानसंकल्पाञ्जनयन्ति मूढानां तु भेदैकसारान्। दिक्षु दशसु बाह्येन्द्रियभूमिषु चरन्त्यो दिक्चर्यः सुप्रबुद्धस्याद्वयप्रथासाराः अन्येषां द्वयप्रथाहेतवः। भूः रूपादिपञ्चकात्मकं मेयपदं तत्र चरन्त्यो भूचर्यस्तदाभोगमय्या आख्यानीभावतया तन्मयत्वमापन्नाः भूचर्यः सुप्रबुद्धस्य चित्प्रकाशशरीरतयात्मानं दर्शयन्त्य इतरेषां सर्वतोऽप्यवच्छिन्नतां प्रथयन्त्यः स्थिताः,—इत्येवं प्रमात्रन्तःकरणबाह्यकरणप्रमेयरूपतयैव तानि चत्वारि चक्राणि गुणादिस्पन्दमयान्यप्रबुद्धबुद्धीर्लौकिकांस्तथा विन्दुनादादिप्रथामात्रसंतुष्टान् योगिनस्तत्तत्त्वप्रसररूपे संसारे पातयन्ति ॥ २० ॥

यत एवम्

अतः सततमुद्युक्तः
स्पन्दतत्त्वविविक्तये।

जाग्रदेव निजं भाव-
मचिरेणाधिगच्छति ॥ २१ ॥

उक्तवक्ष्यमाणरूपस्य स्पन्दतत्त्वस्य विविक्तये विमर्शनाय सततमुद्युक्तः

'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।' [भ० गी० १२।२]

इति गीतोक्तदृशा सततमेवान्तर्मुखस्वरूपनिभालनप्रवणो यः स जाग्रदेव जागरावस्थास्थित एव निजमात्मीयं शंकरात्मकं स्वस्वभावमचिरेणाधिगच्छति, तथा अस्य शंकरात्मा आन्तरः स्वभावः स्वयमेवोन्मज्जति येन प्रबुद्धो नित्योदितसमावेशासादनात्सुप्रबुद्धो जीवन्मुक्तो भवतीत्यर्थः ॥ २१ ॥

यथास्योद्युक्तस्य बलवदालम्बनवशोदितानायासतदन्यसकलवृत्तिक्षयमयीषु नियतासु यास्ववस्थासु स्पन्दनिधानमुन्मुद्रितमभिमुखीभूतमास्ते ता एताः प्रथममुद्योगस्य विषया इत्युपदेष्टुमाह

अतिक्रुद्धः प्रहृष्टो वा
किं करोमीति वा मृशन् ।
धावन्वा यत्पदं गच्छे-
त्तत्र स्पन्दः प्रतिष्ठितः ॥ २२ ॥

सर्वत्र तावदुपायमार्गे समस्तेतरवृत्तिप्रशमपूर्वमेकाग्रीभवन्ति योगिनः, एतास्वतिक्रोधाद्यवस्थासु स्वरसत एव समस्तापरवृत्तिक्षयमयीषु यदि स्पन्दतत्त्वविविक्तये सत-

तमुद्युक्तो झटित्यन्तर्मुखीभवन्ति योगिनस्तत्समीहितमचिरेणैव लभन्ते। अयोगिनस्त्वत्र मूढा एवेति तात्पर्यम्। तथाहि समनन्तरविहितदारुणोपघातशत्रुदर्शनान्मर्मस्पर्शितत्तद्वचनाकर्णनाद्वा प्रथममेवोन्मिषत्संजिहीर्षादेवतावलादन्तर्मुखीभवद्रश्मिचक्रोऽतिक्रुद्धः, चिरप्रार्थितप्राणेशीवदनेन्दुदर्शनादेव तत्क्षणमेवोन्मज्जत्पूर्णाभिलाषदेवतावशविकासितानुधावत्समस्तकरणचक्रः प्रहृष्टो वा, बलवदाततायिबलेन सर्वतो वलितत्वात्कान्दिशीकः किं करोमीति मृशन्विकल्पयन्संशयधाराधिरोहात्मनि पदेऽनुप्रविष्टः क्षीणसकलालम्बनविकसत्संशयसंविन्निरालम्बनीकृतवृत्तिप्रसरो वा, मत्तवारणाद्यनुबध्यमानो धावन् शरीरनिरपेक्षमेव स्वात्मप्रवणीकृतेतरवृत्तिप्रसरदुद्योगदेवीप्रेरणयातित्वरितपलायनक्रियाविष्टो वा; एवमन्यास्वप्येवंप्रायासु सिंहाजगराद्यवलोकनजनितमहात्रासाद्यवस्थासु यद्वृत्तिक्षयात्मकं पदं गच्छेदधितिष्ठेत् स्पन्दतत्त्वविविक्षये सततमुद्युक्तो यो योगिजनस्तस्य तत्र वृत्तिक्षयात्मके पदेऽवस्थाविशेषे स्पन्दः प्रतिष्ठितः स्पन्दतत्त्वमभिमुखीभूतमेव तिष्ठति। तस्मादेतद्वृत्तिक्षयपदं संचेत्य झटिति कूर्माङ्गसंकोचयुक्त्या क्रोधसंशयवृत्तीः प्रशमय्य महाविकासव्याप्तियुक्त्या वा प्रहर्षधावनवृत्तीर्विस्फार्याभिमुखीभूतनिजस्पन्दशक्तिविमर्शवता योगिना भाव्यम्। यथोक्तं श्रीविज्ञानभैरवे

'कामक्रोधलोभमोहमदमात्सर्यगोचरे।
बुद्धिं निस्तिमितां कृत्वा तत्तत्त्वमवशिष्यते'॥ (वि० भै० १०१)
'आनन्दे महति प्राप्ते दृष्टे वा बान्धवे चिरात्।

आनन्दमुद्गतं ध्यात्वा तल्लयस्तन्मना भवेत् ॥ (वि० भै० ७१)
क्षुतायन्ते भये शोके गह्वरे वारणाद्रुते ।
कुतूहले क्षुधायन्ते ब्रह्मसत्ता समीपगा '॥ (वि० भै० ११८)

इति ॥ २२ ॥

एवमेतास्ववस्थासूक्तयुक्त्या प्रथमं स्पन्दशक्तिं परिशील्य तदनु तामेवानुसंदधत्सर्वास्ववस्थासु तद्वाढ्यानुप्रवेशमयीं जीवन्मुक्ततामाहरेत् सततोद्युक्त इत्युपदिशति

यामवस्थां समालम्ब्य
यदयं मम वक्ष्यति ।
तदवश्यं करिष्येऽह-
मिति संकल्प्य तिष्ठति ॥ २३ ॥

तामाश्रित्योर्ध्वमार्गेण
चन्द्रसूर्यावुभावपि ।
सौषुम्नेऽध्वन्यस्तमितो
हित्वा ब्रह्माण्डगोचरम् ॥ २४ ॥

तदा तस्मिन्महाव्योम्नि
प्रलीनशशिभास्करे ।
सौषुप्तपदवन्मूढः
प्रबुद्धः स्यादनावृतः ॥ २५ ॥

---

१ क० ख० पु० आरोहयेद्दिति पाठः ।

अयं शंकरात्मा स्वभावो यन्मम वक्ष्यति अभिव्यक्तं सत् यच्चिदानन्दघनमनुभूतपूर्वं स्वरूपं मां विमर्शयिष्यति तदवश्यमहं करिष्ये बहिर्मुखतां हित्वा तत्प्रवण एव भविष्यामि इति संकल्प्य निश्चित्य यामतिक्रोधाद्यवस्थास्वनुभूतचरीं चिदानन्दघनां स्पन्दात्मिकामवस्थामेवलम्ब्य प्राप्यत्वेनाभिसंधाय तिष्ठति शमिताविकल्पगतिमविकल्पामवस्थामविचलत्वेन भजते यो योगी तदीयां तामवस्थां समाश्रित्य चन्द्रसूर्यौ अपानः प्राणश्चोभावपि हृदयभूमौ मिलित्वा युगपदेव सौषुम्नेऽध्वनि ब्रह्मनाड्यामूर्ध्वमार्गेणोदानपथेनास्तमितः शाम्यतः, कथं ब्रह्माण्डलक्षणं गोचरं हित्वा ब्रह्मबिलाधिष्ठानाद्ब्रह्माधिष्ठितमण्डं भुक्त्वा ऊर्ध्वकपाटान्तां देहव्याप्तिं त्यक्त्वा तदा चोल्लङ्घितदेहव्याप्तिकेऽत एव प्रकर्षेण लीनाद्युक्तरूपौ शशिभास्करौ यत्र तस्मिन्महाव्योम्नि निःशेषवेद्योपशमरूपे परमाकाशे प्राप्तेऽपि यः शिथिलप्रयत्नतया खेचर्याद्यात्मना गुणादिस्पन्दनिःष्यन्देन व्यामोहितत्वात् सौषुप्तपदवद्भवति, सौषुप्तेन च सुप्तमप्युपलक्षितं, तेन च स्वप्नसुषुप्तवत् यः शून्यादिभूमिमेवाधितिष्ठति स योगी सम्यगनभिव्यक्तस्वस्वभावो मूढ इत्युच्यते। यथोक्तं श्रीभट्टकल्लटेन

'या स्पन्दात्मिकामवस्थामवलम्ब्य ।'

इति 'योगिनः' ।

इति च

'यस्य स्वस्वभावाभिव्यक्तिं सम्यक् कृत्वा न प्रमादिना सुप्तमानोऽप्रबुद्धो निरुद्धः स्यात् ।'

१ क० ग० ङ० मत्प्राप्तीति पाठः । २ ग० ङ० समागतानस्येति पाठः ।

इति । यस्तु तत्रापि प्रयत्नपाटवादुद्यन्तृताबलात् क्षणमपि न शिथिलीभवति स तमसानभिभूतत्वात् चिदाकाशमयत्वेनैवावस्थितः प्रबुद्ध उच्यते, अत एव सततोद्योगवतैव योगिना भवितव्यम्,—इत्यादिष्टं गुरुभिः, इति शिवम् ॥ २५ ॥

इति श्रीमहामाहेश्वराचार्यक्षेमराजानकनिर्मिते स्पन्दनिर्णये
स्वरूपस्पन्दः प्रथमो निःष्यन्दः ॥ १ ॥

अथ

# द्वितीयो निःष्यन्दः ।

—=०:*:०=—

एवं प्रथमनिःष्यन्देन स्वस्वरूपात्मकं युक्त्युपपन्नं साभिज्ञानं निमीलनसमाधिप्रत्यभिज्ञेयं स्पन्दतत्त्वं प्रतिपाद्य यथा सततं तत्स्वरूपसमासादनेन सुप्रबुद्धता प्राक्सूचिता भवति तथा इदानीं तस्यैव वैश्वात्म्यमुन्मीलनसमाधिप्रत्यभिज्ञेयं युक्तितोऽपि निर्णेतुं सर्वत्र चिदभेदप्रकाशकं सहजविद्योदयाख्यम् इमं द्वितीयं निःष्यन्दं 'तदाक्रम्य' इत्यादिना 'शिवसद्भावदायिनी' इत्यन्तेन श्लोकसप्तकेन निरूपयति । तत्र विश्वं शुद्धाशुद्धभेदेन द्विधा । तत्र शुद्धं मन्त्रादिरूपं तत एवोत्पन्नं तन्मयं तत्रैव विश्राम्यति,– इति श्लोकद्वयेनोक्तम् । अशुद्धमपि तन्मयमेव,– इत्यपरेण श्लोकद्वयेनाभिहितम् । तत्संवेदनाधिरूढो जीवन्मुक्तः,– इति श्लोकेनोक्तम् । एतत्तत्त्वसमासादनेनैव साधकानां स्वेष्टसिद्धिः,– इति श्लोकद्वयेनाभिहितमिति संक्षेपः । अथ ग्रन्थो व्याख्यायते । यदुक्तम्

'यत्र स्थितमिदं सर्वं कार्यं यस्माच्च निर्गतम् ।' ( १ । २ )

इति, तत्र शुद्धं तावन्मन्त्रादिरूपं, तद्यथा तत एवोत्पन्नं तद्बलेनैव प्रकाशमानं तत्रैव विश्राम्यति तत्प्रथम-

निःष्यन्दपरिघटितदृष्टान्तपुरःसरं निरूपयति

तदाक्रम्य बलं मन्त्राः
  सर्वज्ञबलशालिनः ।
प्रवर्तन्तेऽधिकाराय
  करणानीव देहिनाम् ॥ १ ॥
तत्रैव संप्रलीयन्ते
  शान्तरूपा निरञ्जनाः ।
सहाराधकचित्तेन
  तेनैते शिवधर्मिणः ॥ २ ॥

तत् स्पन्दतत्त्वात्मकं बलं प्राणरूपं वीर्यमाक्रम्य अभेदेन आश्रयतया अवष्टभ्य भगवन्तोऽनन्तव्योमव्याप्यादयो मन्त्राः सर्वज्ञबलेन सर्वज्ञत्वादिसामर्थ्येन श्लाघमाना जृम्भमाणा अधिकाराय देहिनां प्रवर्तन्ते सृष्टिसंहारतिरोधानानुग्रहादि कुर्वन्तीत्यर्थः । सर्वज्ञशब्दो भावप्रधानः सर्वकर्तृत्वाद्युपलक्षयति । यथा देहिनां करणान्युपपादितदृशा तद्बलमाक्रम्य विषयप्रकाशादौ प्रवर्तन्ते इति दृष्टान्तः । तथा निरञ्जनाः कृतकृत्यत्वान्निवृत्ताधिकारमलाः शान्तविशिष्टवाचकात्मस्वरूपास्तत्रैव स्पन्दात्मके बले सम्यगभेदापत्त्या प्रकर्षेणापुनरावृत्त्या लीयन्ते अधिकारमलान्मुच्यन्ते आराधकचित्तेन उपासकलो-

कसंवेदनेन सह । यथोक्तम्

'अनुगृह्याणुतघात याता पदमनामयम् ।' [मा० वि० १।४१]

इति । यतश्च तत एवोदितास्तद्बलेन विसृष्टास्तत्रैव लीयन्ते तेनैते मन्त्रमन्त्रेश्वरादयः शिवस्य परमेश्वरस्य सम्बन्धी धर्मः स्वभावो विद्यते येषां ते तथा सामान्यस्पन्दसारा इत्यर्थः । ननु करणानां मन्त्राणां च तत उदयादौ तुल्ये किमिति करणानि न सर्वज्ञादिरूपाणि? । उच्यते परमेश्वरो मायाशक्त्या शरीरकरणानि भेदमयानि निर्मिमीते, विद्याशक्त्या त्वाकाशीयविचित्रवाचकपरामर्शशरीरान्मन्त्रान् । वाचकस्य मायापदेऽपि

'घटोऽयमित्यध्यवसा नामरूपातिरेकिणी ।
परेशशक्तिरात्मेव भासते न त्विदन्तया ॥' ( १।५।२० )

इति प्रत्यभिज्ञोक्तनीत्या प्रमातृभूम्यनतिक्रान्तेर्न शरीरपुर्यष्टकादिवद्बोधसंकोचकत्वमस्तीति युक्तमेवैषां सर्वज्ञत्वादि । एतच्च

'भेदे त्वेवरासे भाति ।' [।३।१।८]

इति श्रीप्रत्यभिज्ञाकारिकाटीकायां वितत्य दर्शितम् । एवं विद्यापदावस्थितसृष्ट्यादिकार्यनन्तभट्टारकाद्यपेक्षयैतद्व्याख्येयम् । तथा दीक्षादिप्रवृत्तानामाचार्यादीनां करणरूपाः सर्वे मन्त्रास्तत्स्पन्दतत्त्वरूपं बलमाक्रम्य अनुप्राणनेन स्वरूपेभ्य आचार्यादीनामेव सम्बन्धिनाराध-

कचित्तेन सह मोक्षभोगसाधनाद्याधिकाराय प्रवर्तन्ते, तत्रैव शान्तवाचकशब्दात्मकशरीररूपा अत एव च निरञ्जनाः शुद्धाः सम्यक् प्रलीयन्ते विश्राम्यन्ति । अत्र व्याख्याने 'सहाराधकचित्तेन' इति पूर्वश्लोकेन योज्यम् । एवं च मन्त्राणामुदयप्रलयकोटिव्यापि प्रवृत्तावपि भित्तिभूतमिति अभिहितम् । एवं च दशाष्टादशादिभेदेन भिन्ने शैवे मन्त्राणां स्पन्दतत्त्वसारतैवेत्युक्तं भवति ॥ २ ॥

एवं मन्त्रमन्त्रेश्वरादिरूपा शुद्धाभिमता सृष्टिः शिवस्वभावेति प्रतिपाद्याधुना अशुद्धाभिमतापि सा मायादिरूपा शिवस्वरूपैव,-इति उपपादयन् श्रीमतशास्त्रादिरहस्यदृष्टिमपि उपक्षिपति

यस्मात्सर्वमयो जीवः
सर्वभावसमुद्भवात् ।
तत्संवेदनरूपेण
तादात्म्यप्रतिपत्तितः ॥ ३ ॥
तस्माच्छब्दार्थचिन्तासु
न सावस्था न या शिवः ।
भोक्तैव भोग्यभावेन
सदा सर्वत्र संस्थितः ॥ ४ ॥

यतो जीवो ग्राहकः सर्वमयः शिवत्रादिविश्वरूपः, तेन

हेतुना शब्देषु वाचकेषु, अर्थेषु वाच्येषु, चिन्तासु विकल्पज्ञानादिरूपासु आदिमध्यान्तरूपा सावस्था नास्ति या शिवो न भवति सर्वमेव शिवस्वरूपमित्यर्थः । यतश्चैवमतो भोक्तैव चिदात्मा ग्राहको भोग्यभावेन देहनीलादिरूपेण सदा नित्यं सर्वत्र विचित्रतत्त्वभुवनादिपदे सम्यगनूनाधिकतया स्थितः, न तु भोग्यं नाम किञ्चिद्भोक्तुर्भिन्नमस्ति । जीव इत्युपक्रम्य शिव इत्युपसंहारेण जीवशिवयोर्वास्तवो न कोऽपि भेदः,— इति देहाद्यवस्थासु न कासुचिदप्यपूर्णमन्यता मन्तव्या, अपि तु चिद्घनशिवस्वभावतैवेति भङ्ग्योपदिशति । यथोक्तम् 'शरीरमपि ये षट्त्रिंशत्तत्त्वमयं शिवरूपतया पश्यन्ति अर्चयन्ति च ते सिध्यन्ति घटादिकमपि तथाभिनिविश्य पश्यन्ति अर्चयन्ति च तेऽपीति नास्त्यत्र विवादः' इति श्रीप्रत्यभिज्ञाटीकायाम् । भट्टश्रीवामनेनाप्युक्तम्

'आलम्ब्य संविदं यस्मात्सर्वेषां न स्वभावतः ।
तस्मात्संविदितं सर्वमिति संविन्मयो भवेत् ॥'

इति । कस्मात् जीवः सर्वमयः इत्यत्र हेतुः सर्वभावानां संभवादुत्पत्तिहेतुत्वात् अपादानभावप्रधानश्च निर्देशः ।

'प्रमातृमितिमानमेयमयभेदजातस्य ते
विहार इह हेतुतां समुपयाति यस्मात्त्वयि ।
निवृत्तविहृ[ह]तौ क्वचित्तदुपयाति सेनाप्यशु[शु]ना
नयेन पुनरीश्वरो जगति जातुचित्केनचित् ॥'

इति श्रीज्ञानगर्भस्तोत्रोक्तनीत्या संविदेव प्रसृतायां जगतः

सद्भावात्सर्वभावसमुद्भवत्वं जीवस्य, यतश्च जीवादेव उदयति विश्वमतोऽयं सर्वमयो विश्वशक्तिरिति यावत्। निर्णीतं चैतद्द्वितीयसूत्रवृत्तौ। सर्वमयत्वे हेत्वन्तरमाह 'तत्संवेदन' इत्यर्धेन। तस्य सर्वस्य नीलसुखादेर्यत्संवेदनं प्रकाशस्तेन रूपेण स्वभावेन तादात्म्यप्रतिपत्तेः सर्वमयत्वस्योपलम्भात्। एवमनेन श्लोकद्वयेन रहस्यचर्याः सर्वभेदपादपोन्मूलनोपपत्तिपरिघटिताश्च ज्ञानोपदेशकथाः, प्रथमचरमसूत्राभ्यां महार्थतत्त्वं, जाग्रदादिसूत्रेण षडर्धपरमार्थः, 'तदाक्रम्य' इत्यनेन सर्वोपासासारतेत्याद्युपाक्षिप्तमिति स्पन्दतत्त्वेनैव विश्वोपदेशाः स्वीकृताः ॥ ४ ॥

अथैतत्प्रतिपत्तिसारतैव मोक्ष इत्यादिशति

इति वा यस्य संवित्तिः
क्रीडात्वेनाखिलं जगत्।
स पश्यन्सततं युक्तो
जीवन्मुक्तो न संशयः ॥ ५ ॥

वाशब्दः प्रथमनिःष्यन्दोक्तनिमीलनसमाधिप्रकारं विकल्पयन् अस्याः समापत्तेर्दुर्लभतां ध्वनयति। तेनायमर्थः,—ईदृशी तावत्संवित्तिः दुर्लभा यस्य कस्यचिदेवापश्चिमजन्मनो भवति सोऽखिलं जगत्क्रीडात्वेन पश्यन् निजसंविदुन्मेषनिमेषाभ्यां सृजन् संहरंश्च

'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।' (भ०गी० १२। २)

इति स्थित्या सततसमाविष्टो महायोगी जीवन्नेव प्राणादिमानपि विज्ञानाग्निनिर्दग्धाशेषबन्धनो देहपाते तु शिव एव जीवंश्चेदङ्मुक्त एव न तु कथञ्चिदपि बद्धः । 'न संशयः' इत्यनेन इदं ध्वनयति, दीक्षादिना गुरुप्रत्ययतो मुक्तिः, ईदृशात्तु ज्ञानात्समाचाराद्वा स्वप्रत्ययत एवेति ॥ ५ ॥

इयमेव महासमापत्तिः साधकाचार्यादीनामभीष्टप्राप्तिहेतुः,—इति श्लोकद्वयेनाह

अयमेवोदयस्तस्य
ध्येयस्य ध्यायिचेतसि ।
तदात्मतासमापत्ति-
रिच्छतः साधकस्य या ॥ ६ ॥
इयमेवामृतप्राप्ति-
रयमेवात्मनो ग्रहः ।
इयं निर्वाणदीक्षा च
शिवसद्भावदायिनी ॥ ७ ॥

इह 'शिवो भूत्वा शिवं यजेत्' इति यदुद्घोष्यते तत्र ध्यायिनश्चेतसि संवेदने तस्येति 'न सावस्था न या शिवः' इति प्रतिपादितशिवस्वभावस्य ध्येयस्य अन्यस्य वा कस्यचित्तत्तत्सिद्धिहेतोर्मन्त्रदेवताविशेषस्य अय-

मेवोदयः प्रकटीभावः या साधकस्य ध्यातुराचार्यादेः

'तस्माच्छब्दार्थचिन्तासु न सावस्था न या शिवः।' (२।४)

इति प्रतिपादितरूपा तदात्मतासमापत्तिः शिवैक्यावेशो न तु पञ्चवक्त्रादेर्व्यतिरिक्तस्याकारस्य दर्शनं, न तु निश्चयमात्रेण तदात्मतासमापत्तिः अपि तु इच्छतोऽविकल्पविश्वाहन्तात्मकशिवैक्यरूपेच्छापरामर्शाधिरूढस्य। एतदुक्तं भवति, अहमेव तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितो विश्वशरीरश्चिदानन्दघनः शिव इति सङ्कल्पो यस्याविकल्पशेषीभूतत्वेन फलति, तस्य ध्येयमन्त्रदेवतादि किं न नाम अभिमुखीभवति सर्वस्यैतदद्वयप्रथालग्नत्वात्। यथोक्तमस्मत्परमेष्ठिपादैः

'साक्षाद्भवन्मये नाथ सर्वस्मिन्भुवनान्तरे।
किं न भक्तिमतां क्षेत्रं मन्त्रः क्वैषां न सिध्यति॥' (उ० स्तो० १।४)

इति। इयमेव च समापत्तिः परमाद्वयरूपस्यामृतस्य प्राप्तिः, अन्यस्मिँस्त्वमृते कतिपयकालशरीरदार्ढ्यदायिनि प्राप्तेऽपि साधकैर्मरणमवश्यमवाप्यत एवेत्येवकाराशयः। एवं सर्वत्रानेनैवाशयेन श्रीस्वच्छन्दे स्थूलदृष्ट्यामृतप्राप्तिप्रकरणे

'नैव चामृतयोगेन कालमृत्युजयो भवेत्।'

इत्युक्त्वोपसंहृत्य तात्त्विकस्तत्प्राप्तिप्रकारः

'अथवा परतत्त्वस्थः सर्वकालैर्न बाध्यते॥' [७।२२६]

इत्यादिना

'............ सर्वं शिवशक्तिमयं स्मरेत्।'

इति मध्येन

जीवन्नेव विमुक्तोऽसौ यस्येयं भावना सदा ।
यः शिवं भावयेन्नित्यं न कालः कलयेत्तु तम् ।
योगी स्वच्छन्दयोगेन स्वच्छन्दगतिचारिणा ।
स स्वच्छन्दपदे युक्तः स्वच्छन्दसमतां व्रजेत् ।
स्वच्छन्दश्चैव स्वच्छन्दः स्वच्छन्दो विचरेत्सदा । ( ७ । २५८ )

इत्यनेन सहजसन्दर्भेण सप्रशंसं पश्चादुपदिष्टः । अयमेवात्मनो ग्रहो ज्ञानं यदुच्यते 'आत्मा ज्ञातव्य' इति तत्रेदमेव सर्वज्ञसर्वकर्तृस्वतन्त्रशिवस्वरूपतया प्रत्यभिज्ञानमात्मनो ज्ञानं, न तु

'पुरुष एवेदं सर्वम्।' ( श्वेत० उ० ३ । १५ )

इति श्रुत्यन्तविदुक्तं

'त आत्मोपासका सर्वे न गच्छन्ति परं पदम्।' ( स्व० । ४ । ३८८ )

इत्याम्नायोक्तेः । तथा दीक्षावसरे योजनिकाद्यर्थमयमेव शिष्यात्मनोऽनुग्रहः, इमामेव समापत्तिं विद्वानाचार्यः शिष्यात्मानं शिवे योजयन्नाचार्यो भवतीत्यर्थः । इयं स्वप्रत्ययसिद्धा पुत्रकादेः शिवात्मनः सद्भावस्य पारमार्थिकस्वरूपस्य दायिनी निर्वाणदीक्षा । यथोक्तम्

'एवं यो वेद तत्त्वेन तस्य निर्वाणदायिनी ।
दीक्षा भवत्यसन्दिग्धा तिलाज्याहुतिवर्जिता ॥' ( प० त्री० २५ )

---

१ गामिनीति गुरुपरार्त्रीशिकापुस्तकस्थ पाठः ।

इति । हौत्री दीक्षापि दीक्षैव, तत्र मा भूत्कस्याचिद्-नाश्वास इत्याशयेनात्रैवकारो न कृतः श्रीमहागुरुमवरे-णेति शिवम् ॥

इति श्रीमहामाहेश्वराचार्यक्षेमराजानकनिर्मिते
स्पन्दनिर्णये सहजविद्योदयस्पन्दो
द्वितीयो निःष्यन्दः ॥ २ ॥

---

अथ

# तृतीयो निःष्यन्दः ।



एवं निमीलनोन्मीलनसमाधिद्वयसमाधेय उभयाविसर्गारणीभूतः सुप्रबुद्धताभिव्यक्तये स्पन्दतत्त्वसमावेशो निःष्यन्दद्वयेन निर्णीतः । अथेदानीमेतदवष्टम्भा[म्भा]भ्यासेन परापरविभूत्युदयो भवतीत्यभिधाय संक्षेपेण बन्धमोक्षस्वरूपं निरूप्य प्रथमोपक्रान्तं निगमयति—यथेच्छेत्यादिभिः चक्रेश्वरो भवेदित्यन्तैरेकोनविंशत्या श्लोकैरनेन विभूतिस्पन्दाख्येन तृतीयनिःष्यन्देन । तत्र श्लोकद्वयेन जाग्रत्सिद्धस्वातन्त्र्यदृष्टान्तपुरःसरं स्वप्नस्वातन्त्र्यम् । एकेन तद्विपर्ययमभिदधता सततोद्युक्तैरेवाश्रयणीयेति तात्पर्येणोक्तम् । द्वितयेनाभीष्टवस्तुज्ञानाविर्भावः । एकेन कर्तृशक्त्याविर्भूतिः क्षुधादिजयश्च । एकेन सर्वज्ञताप्राप्तिः । एकेन ग्लानिनाशश्चेत्यष्टके निरूपितम् । ततः स्पन्दात्मन उन्मेषस्यैकेन स्वरूपं लक्षितम् । एकेन परसमाधिविघ्नभूतानां सिद्धीनां हेयतोक्ता । एकेन द्वितीयनिःष्यन्दनिर्णीतविश्वात्मतास्वभावः समावेश उक्तः । ततः समाविष्टतालाभे युक्तिरुक्तैकेन । त्रयेण पशुपाशनिर्णय उक्तः । एकेन स्पन्दतत्त्वस्यैव बन्धमोक्षोभयपदाक्रान्ति-

रुक्ता । द्वयेनोच्छेद्यत्वेन ग्रन्थस्वरूपमनूदितम् । एकेन तदुच्छित्त्युपायमभिदधतादिसूत्रोक्तार्थो निगमित इति संक्षेपो निःष्यन्दस्य ॥ अथ ग्रन्थो व्याख्यायते । यदुक्तं 'सुप्रबुद्धस्य सततं स्पन्दतत्त्वोपलब्धिः' इति । तत्र 'अतः सततमुद्युक्त' इत्यनेन जागरायां तत्परिशीलनेन शिक्षा प्रबुद्धस्य सुप्रबुद्धताप्राप्त्यर्थमुक्ता । यामवस्थामित्यादिना प्रतिपदोपायपरिशीलनपाटवेन योगिसुषुप्तावरणाभङ्ग उक्तः ।

इदानीं लौकिकस्वप्नसुषुप्तविदलनेन सुप्रबुद्धतामेव साधयितुं स्वप्नोचितां विभूतिमस्य दर्शयितुमाह

यथेच्छाभ्यर्थितो धाता
जाग्रतोऽर्थान् हृदि स्थितान् ।
सोमसूर्योदयं कृत्वा
संपादयति देहिनः ॥ १ ॥

तथा स्वप्नेऽप्यभीष्टार्थान्
प्रणयस्यानतिक्रमात् ।
नित्यं स्फुटतरं मध्ये
स्थितोऽवश्यं प्रकाशयेत् ॥ २ ॥

धत्ते सर्वमात्मनीति धाता शंकरात्मा स्वभावः स

'प्रवृत्तिर्भूतानामैश्वरी।'

इति। 'तद्धर्मकत्वतः' इति स्वप्नजागरादिपदप्रकाशने भगवत्सृष्टेः स्वातन्त्र्यस्वभावादित्यर्थः ॥ ३ ॥

एवं स्वप्नसौषुप्तनिर्दलनोपायं स्वप्रबुद्धतायै संसाध्य स्पन्दतत्त्वसमावेशोपायं सुप्रबुद्धस्य दृष्टान्तयुक्तिपूर्वकं निरूपयति जिज्ञासितार्थज्ञप्तिरपीत्थं भवतीत्यादिशाति

यथा ह्यर्थोऽस्फुटो दृष्टः
सावधानेऽपि चेतसि।
भूयः स्फुटतरो भाति
स्वबलोद्योगभावितः ॥ ४ ॥
तथा यत्परमार्थेन
येन यत्र यथा स्थितम्।
तत्तथा बलमाक्रम्य
न चिरात्संप्रवर्तते ॥ ५ ॥

हिशब्दः किलशब्दार्थे। सावधानेऽपि चेतसि दूरत्वादिदोषैर्यथा किलार्थोऽस्फुटो दृष्टो भूयोऽभ्यस्तानिरीक्षणात्मना स्वबलोद्योगेन भावितो भृशमालोकितो न केवलं स्फुटो यावत्स्फुटतरोऽपि भाति, तथा यत्स्पन्दतत्त्वात्मकं बलं येनानन्दघनतात्मना परमार्थेन यत्रेति सकलजगदात्मनि स्वस्वभावे यथेति अभेदव्याप्त्या स्थितं त-

त्कर्तृ तथेति स्वबलोद्योगेन अन्तर्मुखतदेकात्मतापरिशीलनप्रयत्नेन संभावितं शीघ्रमेव स्फुटतरत्वेन प्रवर्तते अभिव्यज्यते । कथमाक्रम्याराधकस्य कल्पितदेहादिप्रमातृभूमिं स्वात्मन्येव निमग्नां कृत्वा, अथच स्पन्दात्मकं बलमाक्रम्य स्थितस्य कल्पितदेहबुद्धिप्रमातृभूमिमसकृदुत्तेजयतः साधकस्य योगिनो यज्जिज्ञासितं निधानादि यत्र देशादौ येन हेमादिना परमार्थेन यथा सन्निवेशेन स्थितं तथा तदचिरादेव प्रकाशते ॥ ५ ॥

कर्तृशक्त्यादिरप्यमुत एव बलात्प्रादुर्भवतीत्याह

दुर्बलोऽपि तदाक्रम्य
यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च
तथा योऽतिबुभुक्षितः ॥ ६ ॥

यथा क्षीणधातुर्मृतप्रायः सोऽपि स्पन्दात्मकं बलमाक्रम्य स्पन्दसमावेशबलेन प्राणप्रमातृभूमिमसकृदुत्तेज्य कार्येऽवश्यकर्तव्ये कर्मणि प्रवर्तते, अशक्यमपि वस्तु तद्बलाक्रमणेनैव करोतीत्यर्थः । तथा योऽप्यतिबुभुक्षितः सोऽपि तद्बलाक्रान्त्या क्षुत्पिपासादि शमयति । नहि चिद्घनां भूमिमनुप्रविष्टस्य द्वन्द्वाभिभवः कश्चित्प्राणादिभुव एव तदाश्रयत्वात्तस्याश्चेह चिद्भूमौ निमग्नत्वात् ॥ ६ ॥

यत एवमुक्तसूत्रोपपत्तिक्रमानुसारेणैतत्सिद्धिसमुदायो-ऽस्माद्भवतीत्यतः

अनेनाधिष्ठिते देहे
यथा सर्वज्ञतादयः ।
तथा स्वात्मन्यधिष्ठाना-
त्सर्वत्रैवं भविष्यति ॥ ७ ॥

अनेन स्वस्वभावात्मना स्पन्दतत्त्वेनाधिष्ठिते व्याप्ते देहे सति यथा तदवस्थोचितार्थानुभवकरणादिरूपाः सर्वज्ञतासर्वकर्तृतादयो धर्मा आविर्भवन्ति देहिनः, तथा यद्ययं कूर्माङ्गसंकोचवत्सर्वोपसंहारेण महाविकासयुक्त्या वा स्वस्मिन्ननपायिन्यात्मनि चिद्रूपे अधिष्ठानं करोति उक्ताभिज्ञानप्रत्यभिज्ञाते तत्रैव समावेशास्थितिं बध्नाति तदा सर्वत्रेति शिवादौ क्षित्यन्ते एवमिति शंकरतदुचितसर्वज्ञतासर्वकर्तृतादिरूपो भविष्यति ॥ ७ ॥

इदमप्येतत्प्रसादेनेत्याह

ग्लानिर्विलुण्ठिका देहे
तस्याश्चाज्ञानतः सृतिः ।
तदुन्मेषविलुप्तं चे-
त्कुतः सा स्यादहेतुका ॥ ८ ॥

. . . . . . म्ना सर्वक्लेशानामास्पदं ततश्च देहे या ग्लानिः अर्थाद्देहाभिमानिनः पुंसो यो हर्षक्षयोऽसौ विलुण्ठिका परसंविद्द्रविणापहारेण पारिमित्यदौर्गत्यप्रदा तस्याश्च ग्लानेरज्ञानतश्चिदानन्दघनस्वस्वरूपाप्रत्यभिज्ञानात्स्फातिरुद्भवोऽवस्थितिश्च । तदज्ञानं प्रदर्शयिष्यमाणस्वरूपेणोन्मेषरूपेण चेद्विलुप्तं निकृत्तं तदासौ ग्लानिरज्ञानात्मनो हेतोरभावात् कुतः स्यान्न भवेदित्यर्थः । ग्लान्यभावे च देहेऽवश्यंभाविन्यो व्याध्यादिसन्तापावस्था अपि यथा यथा योगिनोऽपकृष्यन्ते तथा तथा हेम्न इवातिताप्यमानस्य कालिकापगमे स्वस्वरूपं देदीप्यत एव । एवं च देहावस्थितस्यापि सर्वदा ग्लान्यभाव एव परयोगिनो विभूतिः । यथोक्तं परमयोगिन्या मदालसया बालदारकान् प्रयोगीकुर्वत्या

त्वं कञ्चुके शीर्यमाणे निजेऽस्मि-
न्देहे हेये मूढतां मा व्रजेथाः ।
शुभाशुभैः कर्मभिर्देहमेत-
न्मदादिभिः कञ्चुकस्ते निबद्धः ॥ ( मा० पु० २५ । १४ )

इति मितसिद्ध्यभिलाषिणो योगिनः समावेशाभ्यासरसेन देहं विध्यतो वलीपलितादिव्याधिजयो भवतीत्यपि भङ्ग्यानेन प्रतिपादितम् ॥ ८ ॥

अथ योऽयमुन्मेषः स किंस्वरूपः किमुपायलभ्यश्चे-

त्याकाङ्क्षायामाह

एकाचिन्ताप्रसक्तस्य
यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः
स्वयं तमुपलक्षयेत् ॥ ६ ॥

'भावे त्यक्ते निरुद्धा चिन्नैव भावान्तरं व्रजेत् ।
तदा तन्मध्यभावेन विकसत्यतिभावना ॥' (वि० भै० ६२)

इति नीत्या एकस्यां कस्यांचिदालम्बनविशेषनिभृतविकारात्मिकायां चिन्तायां प्रसक्तस्य एकाग्रीभूतस्य योगिनो यत इति तदेकाग्रताप्रकर्षोल्लसत्संवित्स्फारतस्तदालम्बननिमीलनाज्झटिति ग्रस्तसमस्तचिन्तासन्ततेरग्नीषोमाविभेदात्मनः स्पन्दतत्त्वादपर एवोदयश्चिच्चमत्कारात्मान्य एव लोकोत्तर उल्लासः स्यात् स तच्चमत्कारोन्मेषकत्वादेवोन्मेषो विज्ञातव्योऽन्वेषणीयः, इत्थमेव योगिना ज्ञातुं शक्यः ततश्च स्वयमिति इदन्ताविषयत्वाभावादकृतकप्रयत्नात्मनावधानेनाहन्तयैवोपेत्यात्मनि लक्षयेत् असाधारणेन चमत्कारात्मना प्रत्यभिजानीयात् । 'यत एकस्यां विषयविचारादिचिन्तायां प्रसक्तस्य अपरस्याश्चिन्ताया झटित्युदयः स्यात् स चिन्ताद्वयव्यापक उन्मेषः' इत्यन्ये ॥ ६ ॥

इदानीं मितयोगिजनप्रयत्नसाध्यास्वपि तासु तासु

सिद्धिपून्मेषपरिशीलनमात्रोदितासु परयोगिनो हेयत्वमेव मन्तव्यमित्यादिशति

अतो बिन्दुरतो नादो
रूपमस्मादतो रसः ।
प्रवर्तन्तेऽचिरेणैव
क्षोभकत्वेन देहिनः ॥ १० ॥

अत उन्मेषादुपलक्ष्यमाणादप्रलीयमानस्थूलसूक्ष्मादिदेहाहम्भावस्य योगिनोऽचिरेणैव भ्रूमध्यादौ तारकामकाशरूपो बिन्दुरशेषवेद्यसामान्यप्रकाशात्मा, नादः सकलवाचकाविभेदिशब्दनरूपोऽनाहतध्वनिरूपो, रूपमन्धकारेऽपि प्रकाशनं तेजः, रसश्च रसनाग्रे लोकोत्तर आस्वादः क्षोभकत्वेन स्पन्दतत्त्वसमासादनविघ्नभूततावत्सन्तोषप्रदत्वेन वर्तन्ते । यदाहुः

'ते समाधावुपसर्गा व्युत्थाने सिद्धयः ।' (पात० सू० ३ । ३७)

इति । एवमुन्मेषनिभालनोद्युक्तस्यापि देहात्ममानिनो योगिनो बिन्दुनादादयः क्षोभका भवन्तीत्युक्तम् ॥१०॥

इदानीमत्रोन्मेषात्मनि स्वभावे देहप्रमातृतां निमज्जयति, तदाकारामपि परप्रमातृतां लभत इत्याह

दिदृक्षयेव सर्वार्था-
न्यदा व्याप्यावतिष्ठते ।

तदा किं बहुनोक्तेन
स्वयमेवावभोत्स्यते ॥ ११ ॥

यथा पश्यन्तीरूपाविकल्पकदिदृक्षावसरे दिदृक्षितोऽर्थोऽन्तरभेदेन स्फुरति तथैव स्वच्छन्दाद्यध्वप्रक्रियोक्तान् धरादिशिवान्तान्तर्भाविनोऽशेषानर्थान् व्याप्येति सर्वमहमिति ,सदाशिववत् स्वविकल्पानुसन्धानपूर्वकमविकल्पान्तमभेदविमर्शान्तःक्रोडीकारेणाच्छाद्य यदावतिष्ठते अस्याः समापत्तेर्न विचलति , तावदशेषवैश्वैकीकारेणोन्मिषत्तावद्वेद्यग्रासीकारिमहाप्रमातृतासमावेशचमत्काररूपं यत्फलं तत्स्वयमेवावभोत्स्यते स्वसंविदैवानुभविष्यति , किमत्र बहुना प्रतिपादितेन ॥ ११ ॥

तस्योपलब्धिः सततम् इति प्रतिज्ञाय तदनन्तरमुपपादितमुपायजातं परिशीलयतः सततं स्पन्दतत्त्वसमाविष्टत्वं सुप्रबुद्धस्य भवतीति तदनन्तप्रमेयगंभिन्नत्वादुपदेश्यहृदये स्मारयन्ननुप्रवेशयुक्त्युपसंहारभङ्ग्याह

प्रबुद्धः सर्वदा तिष्ठे
ज्ज्ञानेनालोक्य गोचरम् ।
एकत्रारोपयेत्सर्वं
ततोऽन्येन न पीड्यते ॥ १२ ॥

सर्वदा जागरास्वप्नसुषुप्तसंविदादिमध्यान्तपदेषु प्रबुद्ध-

स्तिष्ठेत् उन्मीलितस्पन्दतत्त्वावष्टम्भादिव्यदृष्टिः सुप्रबुद्धतामेव भजेत । कथं ज्ञानेन बहिर्मुखेनावभासेन सर्वं गोचरं नीलसुखादिरूपं विषयमालोक्य

तस्माच्छब्दार्थचिन्तासु न सावस्था न या शिवः ( २ । ४ )

इत्युपपादितदृशा विमृश्य एकत्र स्रष्टरि शंकरात्मनि स्वभावे सर्वमारोपयेत् निमीलनोन्मीलनदशयोस्तदभेदेन जानीयात्, पूर्वापरकोट्यवष्टम्भदार्ढ्यान्मध्यभूमिमपि चिद्रसाश्यानतारूपतयैव पश्येदित्यर्थः । एवं च न केनचिदन्येन व्यतिरिक्तेन वस्तुना बाध्यते सर्वस्मिन् स्वात्मनः स्वीकृतत्वात् । यथोक्तं श्रीप्रत्यभिज्ञाकारेण

योऽविकल्पमिदमर्थमण्डलं
पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जग-
त्यस्य नित्यसुखिनः कुतो भयम् ॥ (उ० स्तो० १३ । १६)

इति ॥ १२ ॥

'ततोऽन्येन न पीड्यते' इति यदुक्तं तत्र कोऽसावन्यः पीडकः कश्च पीड्यः, यतः शिवात्मकमेव विश्वमुक्तमित्याशङ्क्य पाशानां पशोश्च स्वरूपं निर्णेतुमाह

शब्दराशिसमुत्थस्य
शक्तिवर्गस्य भोग्यताम् ।
कलाविलुप्तविभवो
गतः सन्स पशुः स्मृतः ॥ १३ ॥

इह योऽयं प्रकाशात्मा स्वस्वभावः शांकर उक्तः, असौ

व्यवस्थितः करोत्येष विश्वकारणमीश्वरः ।
सृष्टिं स्थितिं च संहारं तिरोधानमनुग्रहम् ॥ (स्व० ।)

इति श्रीस्वच्छन्दशास्त्रदृष्ट्या निजशक्त्याश्लिष्टः सदा पञ्चविधकृत्यकारी स्वतन्त्रः स्पन्दललितेश्वरादिशब्दैरागमेषूद्घोष्यते । स्वातन्त्र्यशक्तिरेवास्य सनातनी पूर्णाहन्तारूपा परा मत्स्योदरी महासत्ता स्फुरत्तोर्मिः सारं हृदयं भैरवी देवी शिखा इत्यादिभिरसंख्यैः प्रकारैस्तत्र तत्र निरुच्यते । पूर्णाहन्तैव चास्यानुत्तरानाहतशक्तिसंपुटीकारस्वीकृतादिक्षान्तवर्णभट्टारिका तत एव स्वीकृतानन्तवाच्यवाचकरूपषडध्वस्फारमयाशेषशक्तिचक्रक्रोडीकारान्तःकृतनिःशेषसर्गप्रलयादिपरम्पराप्यक्रमविमर्शरूपैव नित्योदितानुच्चार्यमहामन्त्रमयी सर्वजीवितभूता परा वाक् । एषैव भगवत इयद्विश्ववैचित्र्यचलत्तामिव स्वात्मनि प्रथयन्ती स्पन्दते इत्यर्थानुगमात् स्पन्द इति इहोच्यते । एवं चेयद्विश्वशक्तिखचितपराशक्तिसुन्दरस्य स्वात्मनः स्वरूपगोपनक्रीडया स्वात्माभित्तावंशांशिकया निर्भासनं भगवान् यावच्चिकीर्षति तावदेकैवाभिन्नाप्यसौ तदीया विमर्शशक्तिरिच्छात्वं प्रतिपद्य ज्ञानक्रियारूपतया स्थित्वा शिवशक्तिपरामर्शात्मकबीजयोनिभेदेन द्विधा भूत्वा वर्गभेदेन तत्कलाभेदेन च नवधा पञ्चाशद्धा च स्फुरन्ती तद्विमर्शसारैरघोरघोरघोरतरैः शक्तिरश्मिदेवता-

त्मभिः रूपैः प्रथमाना भगवतः पञ्चविधकृत्यकारितां निर्वहति । यथोक्तं श्रीमालिनीविजयोत्तरे

या सा शक्तिर्जगद्धातुः कथिता समवायिनी ।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते ॥ (३।५)
सैकापि सत्यनेकत्वं यथा गच्छति तच्छृणु ।
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ॥
ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते ।
एवं भवत्विदं सर्वमिति कार्योन्मुखी यदा ॥
जाता तदैव तद्वस्तु कुर्वत्यत्र क्रियोच्यते ।
एवमेषा द्विरूपापि पुनर्भेदैरनन्तताम् ॥
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी ।
तत्र तावत्समापन्ना मातृभावं विभिद्यते ॥
द्विधा च नवधा चैव पञ्चाशद्धा च मालिनी ।
बीजयोन्यात्मकाद्भेदाद्द्विधा बीजं स्वरा मताः ॥
कादयश्च स्मृता योनिर्नवधा वर्गभेदतः ।
पृथग्वर्णविभेदेन शतार्धकिरणोज्ज्वला ॥
बीजमत्र शिवः शक्तिर्योनिरित्यभिधीयते ।
वर्गाष्टकमिति ज्ञेयमघोराद्यमनुक्रमात् ॥
तदेव शक्तिभेदेन माहेश्वर्यादि चाष्टकम् ।
शतार्धभेदभिन्ना च तत्संख्यानां वरानने ॥
रुद्राणां वाचकत्वेन कल्पिता परमेष्ठिना ।
तद्वदेव च शक्तीनां तत्संख्यानामनुक्रमात् ॥

इत्यादि । तथा

विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।
रुद्राणून्याः समालिङ्ग्य घोरतर्योऽपरास्तु ताः ॥
मिश्रकर्मफलासक्तिं पूर्ववज्जनयन्ति याः ।

मुषितमार्गनिरोधिन्यस्ताः स्युर्घोराः परापराः ॥
पूर्ववज्जन्तुजातस्य शिवधामफलप्रदाः ।
पराः प्रकथितास्तज्ज्ञैरघोराः शिवशक्तयः ॥ (३ । ३३)

इति । एवं शब्दराशेः समुत्थितो वर्गनवकरूपो यो ब्राह्म्यादिदेवतावर्गः शिवसहितस्तस्य भोग्यतां पारयतां गतः सन् स एव शंकरात्मा स्वभावः पशुः स्मृतः आगमेषु तथोक्तः । ननु कथं भोक्ता महेश्वर इमामवस्थां प्राप्तः, इत्याशङ्काशान्त्यै विशेषणद्वारेण हेतुमाह कलाविलुप्तविभव इति । कलयति बहिः क्षिपति पारिमित्येन परिच्छिनत्तीति कला मायाशक्तिः, तया विलुप्तविभवः स्वमायया गूहितैश्वर्यः स्थित इत्यर्थः । अथ च कलया किंचित्कर्तृत्वोपोद्बलनात्मना शक्त्या तदुपलक्षितेन कलाविद्याकालनियतिरागात्मना कञ्चुकेन विलुप्तविभवः स्थगितपूर्णत्वकर्तृत्वादिधर्मः । भवत्वेवं, भोग्यतां तु कथमसौ शक्तिवर्गस्य गतः इत्यत्रैतदेवोत्तरम् । कलाभिरकारादिवर्गाधिष्ठायिकाभिर्ब्राह्म्यादिभिस्तद्वर्णभट्टारकाधिष्ठातृभूताभिश्च श्रीमालिनीविजयोक्तदेवतारूपाभिः कलाभिरकारादिवर्णैर्विलुप्तविभवः संकुचितोऽस्मि, अपूर्णोऽस्मि, करवाणि किंचिदिदमुपाददे, इदं जहामि इत्यादिविचित्रविकल्पकाविकल्पकप्रतिपत्तिकदम्बकान्तरनुप्रविष्टस्थूलसूक्ष्मशब्दानुवेधकदर्थितो हर्षशोकादिरूपतां नेनीयमान इव क्षणमपि स्वरूपस्थितिं न लभते यतः,

अतोऽसावुक्तरूपः शक्तिवर्गेण भुज्यमानः पशुरुक्तः । कलया अख्यात्यात्मनांशेन विलुप्तविभवः संकुचित इव, न तु तत्त्वतः शिवात्मा स्वभावोऽस्य क्वापि गतः, तदभावे हि स एव न स्फुरेत् । तथावभासमानैरेव कलाभिः संकुचितैः शब्दैर्ज्ञानैश्च विलुप्तविभवस्तथारूपमात्मानं न विमृष्टुं क्षम इत्यर्थः ॥ १३ ॥

अधुना पशुः संकुचितदृक्छक्तिवाच्यः पाश्यश्चेत्येतद्विभजति

परामृतरसापाय-
स्तस्य यः प्रत्ययोद्भवः ।
तेनास्वतन्त्रतामेति
स च तन्मात्रगोचरः ॥ १४ ॥

तस्य पशोर्यः प्रत्ययानां लौकिकशास्त्रीयविकल्पानां तदधिवासितानां भिन्नार्थज्ञानानां विकल्पानामप्युद्भवः विनाशाघ्रात उत्पादः स परस्यामृतरसस्य चिद्घनस्यानन्दप्रसरस्यापायो निमज्जनम् । उदितेषु भिन्नार्थेषु प्रत्ययेषु चिद्भूमिः स्थिताप्यपरामृश्यमानत्वादस्थितेव लक्ष्यते, तत एवमुक्तम् । तेन च प्रत्ययोद्भवेनायमस्वतन्त्रतामेति तद्वशः सम्पद्यते । यदुक्तं श्रीशिवसूत्रेषु 'ज्ञानं बन्धः' ( १ । २ ) इति । श्रीमद्व्यासमुनिनापि 'मातापितृमयो बाल्ये' इति । श्रीमदालसयापि

तातेति किंचित्तनयेति किंचित्
अम्बेति किंचिद्दयितेति किंचित् ।
ममेति किंचिन्न ममेति किंचित्
भौतं सघ बहुधा मा लपेथा ॥ ( मा० पु० २९ । १९ )

इति । प्रत्ययस्योद्भवस्तन्मात्राणि तीव्रातीव्रभेदसामान्यवृत्तयो गोचरो यस्य तथाभूतो भिन्नवेद्यविषय इत्यर्थः । अनेनेदमाह यावदियं भिन्नवेद्यप्रथा तावद्बद्ध एव, यदा तूक्तोपदेशयुक्त्या सर्वमात्ममयमेवाविचलप्रतिपत्त्या प्रतिपद्यते तदा जीवन्मुक्त इति । यथोक्तं 'इति वा यस्य संवित्तिः' [ २ । ५ ] इत्यादि । एवं च यत्पूर्वमुक्तं 'तस्माच्छब्दार्थचिन्तासु न सावस्था न या शिवः ।' ( २ । ४ ) इत्यादि, न तेन सह 'परामृतरसापायस्तस्य यः प्रत्ययोद्भवः' ( ३ । १४ ) इत्यस्य वैषम्यं किंचित् ॥ १४ ॥

ननु यदि प्रत्ययोद्भवोऽप्यस्य परामृतरसापायः तत्कथमुक्तं शक्तिवर्गस्य भोग्यतां गतः,—इत्याशङ्कां परिहरति

स्वरूपावरणे चास्य
शक्तयः सततोत्थिताः ।
यतः शब्दानुवेधेन
न विना प्रत्ययोद्भवः ॥ १५ ॥

चः शङ्कां द्योतयन् तत्परिहाररूपं प्रमेयान्तरं समु-

चिनोति । अस्य पशोः स्वस्य शिवात्मनो रूपस्यावरणे भित्तिभूतत्वेन प्रथमानस्यापि सम्यगपरामर्शने तन्निमित्तं व्याख्यातरूपाः शक्तयः सततमुत्थिताः, यावद्धि परामृतरसात्मकस्वस्वरूपप्रत्यभिज्ञानमस्य न वृत्तं तावदेताः स्वस्वरूपावरणायोद्यच्छन्त्येव । यतोऽस्य यः प्रत्ययोद्भवो विकल्पकाविकल्पकज्ञानप्रसरः स शब्दानुवेधेन 'अहमिदं जानामि' इत्यादिना सूक्ष्मान्तःशब्दानुरञ्जनेन स्थूलाभिलापसंसर्गेण च विना न भवति,— इति तिरश्चामप्यसांकेतिकः निर्देशप्रख्यः, स्वात्मनि च शिरोनिर्देशप्रख्योऽन्तरभ्युपगमरूपः शब्दनविमर्शोऽस्त्येव, अन्यथा बालस्य प्रथमसंकेतग्रहणं न घटेत अन्तरूहापोहात्मकविमर्शशून्यत्वात् । स्थूलशब्दानुवेधमयस्तु विकल्पः सर्वस्य स्वानुभवसिद्धः ॥ १५ ॥

श्लोकत्रयोक्तमर्थमुपसंहरन्नियतः प्रमेयस्य सामान्यस्पन्दतत्त्वादभिन्नतां प्रागुक्तामनुबध्नन् तत्प्रत्यभिज्ञानाप्रत्यभिज्ञानमयौ बन्धमोक्षौ, इति लक्षयति

सेयं क्रियात्मिका शक्तिः
शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था
ज्ञाता सिद्ध्युपपादिका ॥ १६ ॥

सेति श्लोकत्रयनिर्णीतत्वात्, इयमिति प्रमेयपर्यन्तेन

रूपेण स्फुरन्ती स्वस्वभावरूपस्य चिदात्मनः शिवस्य सम्बन्धिनी स्पन्दतत्त्वात्मिका पराभट्टारिकैव विश्ववैचित्र्यावस्थितिकारित्वात् क्रियाशक्तिः प्राङ्निर्णीतदृशा शिव एव गृहीतपशुभूमिके वर्तमाना प्राणपुर्यष्टकरूपममुं कर्तृतात्मनाहन्ताविप्रुषा प्रोक्षितं कुर्वाणा तथारूपेणाप्रत्यभिज्ञाय स्वरूपावारकत्वाद्धानादानादिपरिक्लेशहेतुत्वाच्च बन्धयित्री भवति । यदा तु स्वस्य शिवात्मनो रूपस्य यो मार्गः

'शक्त्यवस्था प्रविष्टस्य निर्विभागेन भावना ।
तदासौ शिवरूपी स्याच्छैवी मुखमिहोच्यते ॥' ( २० )

इति श्रीविज्ञानभट्टारकोक्तनीत्या प्राप्युपायः पराशक्तिस्तदात्मतयासौ क्रियाशक्तिर्ज्ञायते योगिना, यदा वा विकल्पकाविकल्पकप्रसरेऽपि शिवस्वरूपस्य स्वात्मनोऽशभूतमेवाशेषवेद्यमनेनेच्यते तदास्यासौ परानन्दमयीं परां सिद्धिमुपपादयति ॥ १७ ॥

इत्थंकारं ( पशुरत्र बध्यते, वक्ष्यमाणोपायपरिशीलनेन च मुच्यते, इति प्रतिपादयन् बन्धस्वरूपमुच्छेद्यत्वेनानुवदति )

तन्मात्रोदयरूपेण
मनोऽहंबुद्धिवर्तिना ।

पुर्यष्टकेन संरुद्ध-
स्तदुत्थं प्रत्ययोद्भवम् * ॥ १७ ॥

भुङ्क्ते परवशो भोगं
तद्भावात्संसरेदतः ।
संसृतिप्रलयस्यास्य
कारणं संप्रचक्ष्महे ॥ १८ ॥

पुर्यष्टकोत्थितं भोगं भुङ्क्ते । यत एव प्रत्ययेषु सुखादिप्रत्ययोद्भवः अत एवासौ प्रत्ययोद्भवात् पशुः परवशः शब्दानुवेधक्रमेण पदे पदे ब्राह्म्यादिदेवीभिराक्षिप्यमाणः, न तु सुप्रबुद्धवत् स्वतन्त्रः तस्य पुर्यष्टकस्य भावादेव पुनःपुनरुद्बोधितविचित्रवासनः संसरेत् तत्तद्भोगोचितभोगायतनानि शरीराण्यर्जयित्वा गृह्णाति चोत्सृजति च । यतश्चैवमतोऽस्य पुर्यष्टकसंरुद्धस्य या संसृतिस्तस्या यः प्रकृष्टो लयः पुर्यष्टकात्मकमलोच्छेदेन विनाशः तस्य कारणं सम्यक् सुखोपायं प्रचक्ष्महे समनन्तरमेव ब्रूमः, तथा संप्रचक्ष्महे प्रकरणेऽस्मिन् स्वयं प्रतिपादितवन्तः । 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा० सू० ३ । ३ । १३१) इति वर्तमानप्रयोगः ॥ १८ ॥

एतत् प्रतिपादयन् आद्यसूत्रोक्तमर्थं निगमयति

---

* अस्य श्लोकस्य टीका न लब्धा ।

यदा त्वेकत्र संरूढ-
स्तदा तस्य लयोदयौ ।
नियच्छन्भोक्तृतामेति
ततश्चक्रेश्वरो भवेत् ॥ १९ ॥

यदा पुनरयमुक्ताः परतत्त्वसमावेशोपदेशयुक्तीः परिशीलयन् एकत्र पूर्णाहन्तात्मनि स्पन्दतत्त्वे सम्यगविचलत्वेन रूढः समाविष्टस्तन्मयो भवति, तदा तस्येति पूर्वसूत्रनिर्दिष्टस्य पुर्यष्टकस्य तद्द्वारेणैव विश्वस्य निमीलनोन्मीलनसमावेशाभ्यां लयोदयौ नियच्छन् प्रथमसूत्रनिर्णीतदृशा एकस्मादेव शंकरात्मनः स्वभावात् संहारं सर्गं च कुर्वन् भोक्तृतामेति धरादिशिवान्तसमग्रभोग्यकवलनेन परमप्रमातृतां सतीमेव प्रत्यभिज्ञानक्रमेणावलम्बते । ततश्च प्रथमसूत्रनिर्णीतस्य शक्तिचक्रस्य स्वमरीचिनिचयस्येश्वरोऽधिपतिर्भवेत् । अनेनैव च देहेन महेश्वरत्वमवाप्नोत्येवेति यावत् । एवं चोपक्रमोपसंहारयोर्महार्थसंपुटीकारं दर्शयन् तत्सारतया समस्तशांकरोपनिषन्मूर्धन्यतामस्याविष्करोति शास्त्रस्य श्रीमान्वसुगुप्ताचार्यः, इति शिवम् ॥

इति श्रीस्पन्दनिर्णये विभूतिस्पन्दस्तृतीयो निःष्यन्दः
समाप्तः ॥

अथ

# चतुर्थो निःष्यन्दः

—=०:※:०=—

ग्रन्थान्ते परमां स्पन्दभूमिं गुरुगिरं च श्लेषोक्त्या स्तौति

अगाधसंशयाम्भोधि-

समुत्तरणतारिणीम् ।

वन्दे विचित्रार्थपदां

चित्रां तां गुरुभारतीम् ॥ १ ॥

तामसामान्यां भगवतीं गुरुं 'शैवी मुखमिहोच्यते' (वि० भै० २०) इति स्थित्या शिवधामप्राप्तिहेतुत्वादाचार्यरूपाम् । अथच गुरुं पश्यन्त्यादिक्रोडीकारात् महतीं भारतीं परां वाचम्, तथा गुरोराचार्यस्य सम्बन्धिनीमुपदेष्ट्रीं गिरं चित्रां लोकोत्तरचमत्काररूपां वन्दे सर्वोत्कृष्टत्वेन समाविशामि । अथ च सर्वावस्थासु स्फुरद्रूपत्वादभिवदन्तीमुद्यन्तृतामयत्नेनाभिवादये स्वरूपविमर्शनिष्ठां तां समावेष्टुं संमुखीकरोमि । कीदृशीमगाधो दुरुत्तरो यः संशयः पूर्णाहन्तानिश्चयाभावात्मा विचि-

त्रः शङ्काकलङ्कः स एव विततत्वेनाम्भोधिस्तस्य सम्यगुत्तरणे या तारिणी नौरिव तामित्युभयत्रापि योज्यम् । तथा विचित्रार्थानि नानाचमत्कारप्रयोजनानि पदानि विश्रान्तयो यस्यां परस्यां वाचि तां विचित्राणि रम्यरचनानुप्रविष्टानि अर्थपदानि वाच्यवाचकानि यस्यां गुरुवाचि ताम् ॥ १ ॥

प्रसिद्धप्रभावस्वनामोदीरणात्सम्भावनाप्रत्ययेनार्थिनः प्रवर्तयन् गृहनीयतया महाफलतामस्य शास्त्रस्य निरूपयति शास्त्रकारः

लब्ध्वाप्यलभ्यमेत-
ज्ज्ञानधनं हृद्गुहान्तकृतनिहितेः ।
वसुगुप्तवच्छिवाय हि
भवति सदा सर्वलोकस्य ॥ २ ॥

एतच्छास्त्रोक्तमेतज्ज्ञानमेव पुरुषार्थप्राप्तिहेतुत्वाद्धनमलभ्यमपि दुष्प्रापमपि लब्ध्वा शंकरस्वमोपदेशसारं शिलातलादवाप्य प्रकाशविमर्शात्मकं हृदयमेव विश्रान्तःप्रवेशावकाशप्रदत्वाद्गुहा तस्यामन्तेन निश्चयेन कृता निहितिः स्थापना येन अर्थात्तस्यैव ज्ञानधनस्य, तस्य स्वामिनः श्रीवसुगुप्ताभिधानस्य गुरोर्यथैव तच्छिवाय जातं, तद्वदधिकारिनियमसंकोचाभावात्सर्वलोकस्यापि हृद्गु-

ह्यन्तकृतानिहितैर्यत्नाद् सामयिकात् गोपयतः दृढप्रतिपत्त्या च स्वात्मीकुर्वतः सदा शिवाय भवति नित्यशंकरात्मकस्वस्वभावसमावेशलाभाय सम्पद्यत इति शिवम् ॥ २ ॥

यद्यप्यस्मिन् विवृतिगणना विद्यते नैव शास्त्रे
लोकश्चायं यदपि मतिमान् भूयसोत्तानवृत्तिः ।
जानन्त्येते तदपि कुशलास्तेऽस्मदुक्तेर्विशेषं
केचित्सारग्रहणनिपुणाश्चेतनाराजहंसाः ॥ १ ॥

अनन्तापरटीकाकृन्मध्ये स्थितिममृष्यता ।
विवृतं स्पन्दशास्त्रं नो गुरुणा नो, मयास्य तु ॥ २ ॥

विशेषलेशः सन्दोहे दर्शितः पूर्वमद्य तु ।
रुद्रशक्तिसमावेशशालिनः शिवरूपिणः ॥ ३ ॥

शूरनाम्नः स्वशिष्यस्य प्रार्थनातिरसेन तत् ।
निर्णीतं क्षेमराजेन स्फारान्निजगुरोर्गुरोः ॥ ४ ॥

येषां नो धिषणोपदेशविशदा सद्देशिकैर्दर्शिता
श्रीमच्छाम्भवशासनोपनिषदा येषां न भग्नो भ्रमः ।
ये नास्वादितपूर्विणो मृदुधियः श्रीप्रत्यभिज्ञामृतं
ते नात्राधिकृताः परैः पुनरिदं पूर्णाशयैश्चर्व्यताम् ॥ ५ ॥

शिवादिक्षित्यन्तो विततविततो योऽध्वविभवः
स्फुरन्नानासर्गस्थितिलयदशाचित्रिततनुः ।
इयद्विश्वं यस्य प्रसरकणिकासौ विजयते
परः संवित्स्पन्दो लसदसमसौख्यायतनभूः ॥ ६ ॥

## समाप्तोऽयं श्रीस्पन्दनिर्णयः

कृतिः श्रीप्रत्यभिज्ञाकारप्रशिष्यस्य महामाहेश्वराचार्यश्रीमदभिनवगुप्तनाथदत्तोपदेशस्य श्रीक्षेमराजस्येति शिवम् ॥



श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्यायं प्रकाशितः ॥



# SPANDANIRNAYA.

Sankara's Spanda Energy out of Her own nature portrays, on the background of Her pure self, the totality of categories, as a mirror does the city, from earth up to Siva, which (totality) is one in substance with Her own self. She is the divinity representing the faculty of cognition She forms the vitality of mantras and is ever abloom Identical with the universe of sound and with the supreme egoity or infinite consciousness, She exults in glory all the wide world over.

My Spandasandoha has already thrown light in a measure on the principle of Spanda. And now an adequate effort is directed to giving a detailed and satisfactory exposition of the same principle.

This gloss on the Spanda system calculated to explain the right interconnection

of the Sutras, i e the Spandakarikas, to enable a student for acquiring a close approach to the highest principle, to teach the method of pointed reasoning and the right application of the means (upaya), to help in the proper understanding of the self-evident truths and lastly to bring home the secret philosophy of Kashmir Shaivism The intelligent should, hence, pin their attention to this gloss and thereby acquire the wealth of Spanda

[Introductory]

[Tradition ] Vasugupta, a great teacher of the past, received initiation in a dream from Parama Siva Who is ever ready to exhibit His kindness to the universe and his spiritual glory was as a consequence enkindled by His grace Under His holy command, once, he repaired to the Mahadeva mountain and found, the heretofore hidden Siva Sutras, engraved on the surface of the rock To elucidate the harmony that subsists between the revelation and the experience, the Sutras were collected and epitomised in the 51 slokas of the Spanda Sastra, which are clear yet deep.

(Synopsis of the book.)

The first 25 stanzas discuss the energy of Swarupa or the vitality in real nature; the next seven, the energy in the rise of Sahajavidya or intuition; the last 19, mention the energy in and of glory. Thus the Spandakarikas are arranged into three chapters.

[ Contents of the first chapter ] Of them the first begins with the stanza of salutation which, besides being such, gives, in a nutshell, the subject-matter of the thesis. The next four stanzas prove the Spanda principle by valid arguments. The sixth and the seventh describe the means to its attainment along with its recognising characteristic. The eighth is devoted to refutation of the objections raised against the means. The ninth strengthens the position of the upaya, because it discusses the unfailing character of the latter in leading to the goal. The tenth explains the real nature of the goal as obtainable by that means. The eleventh tells how the delusion of the world ceases by strict adherence thereto. The 12th and the 13th, by discarding the view of the Nihilists, bring out the striking contrast between their view and that of Spanda. The 14th establishes the indes-

tructibility of the Spanda principle although the world of objects brought into play by that principle is destructible While supporting the same view, the 15th and the 16th explode the theory of Nihilism The 17th remarks that, while the realisation of this principle is always within the reach of the fully awakened, the partially awakened have it only at the *two extreme stages* The 18th gives the sphere of the objects that are sensed by the fully awakened The 19th summarises the process conducive to the vanishing of obstacles in the way of the fully awakened The 20th relates how, in the case of the unenlightened, the real nature is shrouded in mystery The 21st is directed to emphasise the necessity of incessant exertion for the acquisition of complete enlightenment. The 22nd says that there are particular functions in the worldly life, which, as leading to the stoppage of all others, afford the field for this exertion The 23rd—25th urge that the enlightened should always be on the alert to be perfectly enlightened by cutting to pieces, in a manner befitting yogis, the veil of darkness akin to the state of sound sleep.

This is the sum and substance of

the section beginning with "at Whose waking etc". and ending " will be enlightened etc".

[TEXT] 1.—(We) offer our salutation to that Sankara Who is the fountain-head of all glory manifest in the wheel of energies and at Whose waking and sleeping the world finds its rise and dissolution.

[COMMENT.]–Sankara means the one Being through Whose favour one gets the recognition of the full display of the universal consciousness identical with the adualism of supreme bliss wherein all troubles cease totally Sankara thus represents one's own real nature. We salute Him, i. e, while thinking over Him as superior to the whole universe, we try to find entrance in Him by forgetting the idea of limited and artificial experiencer created by Him. *Entrance-in-Him*, which bears the fruit of liberation-in-life, will be explained, here, in this treatise. The use of plural is meant, here to convey the idea of identity with regard to all those who are worthy of divine grace and who deserve an affectionate glance of kindness. The half of the stanza beginning " at

